# SundarakAnDa – Prathama sargaH

ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥5.1.1 ॥

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन् कर्म वानरः ।
समुदग्रशिरोग्रीवो गवांपतिरिवाबभौ ॥5.1.2 ॥

अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः ।
धीरः सलिलकल्पेषु विचचार यथासुखम् ॥5.1.3 ॥

द्विजान् वित्रासयन् धीमानुरसा पादपान् हरन् ।
मृगांश्च सुबहून्निघ्नन् प्रवृद्ध इव केसरी ॥5.1.4 ॥

नीललोहितमांजिष्ठपत्रवर्णैः सितासितैः ।
स्वभावविहितैश्चित्रैर्धातुभिः समलङ्कृतम् ॥5.1.5 ॥

कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ।
यक्षकिन्नरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥5.1.6 ॥

स तस्य गिरिवर्यस्य तले नागवरायुते ।
तिष्ठन् कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥5.1.7 ॥

स सूर्याय महेन्द्राय पवनाय स्वयंभुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥5.1.8 ॥

अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये ।
ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥5.1.9 ॥

प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ।
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥5.1.10 ॥

निष्प्रमाणशरीरः सन् लिलङ्घयिषुरर्णवम् ।
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥5.1.11 ॥

स चचालाचलश्चापि मुहूर्तं कपिपीडितः ।
तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥5.1.12 ॥

तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना ।
सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥5.1.13 ॥

तेन चोत्तमवीर्येण पीड्यमानः स पर्वतः ।
सलिलं सम्प्रसुस्राव मदं मत्त इव द्विपः ॥5.1.14 ॥

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः ।
रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥5.1.15 ॥

मुमोच च शिलाः शैलो विशालाः समनःशिलाः ।
मध्यमेनार्चिषा जुष्टा धूमराजीरिवानलः ॥5.1.16 ॥

हरिणा पीड्यमानेन पीड्यमानानि सर्वतः ।
गुहाविष्टानि भूतानि विनेदुर्विकृतैः स्वरैः ॥5.1.17 ॥

स महासत्त्वसन्नादः शैलपीडानिमित्तजः ।
पृथिवीं पूरयामास दिशश्चोपवनानि च ॥5.1.18 ॥

शिरोभिः पृथुभिः सर्पा व्यक्तस्वस्तिकलक्षणैः ।
वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः ॥5.1.19 ॥

तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ।
जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥5.1.20 ॥

यानि त्वौषधजालानि  तस्मिञ्जातानि पर्वते ।
विषघ्नान्यपि नागानां न शेकुः शमितुं विषम् ॥5.1.21 ॥

भिद्यते ऽयं गिरिर्भूतैरिति मत्त्वा तपस्विनः ।
त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्री गणैः सह ॥5.1.22 ॥

पानभूमिगतं हित्वा हैममासवभाजनम् ।
पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥5.1.23 ।

लेह्यानुच्चावचान् भक्ष्यान् मांसानि विविधानि च ।
आर्षभाणि च चर्माणि खड्गांश्च  कनकत्सरून् ॥5.1.24 ॥

कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ।
रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥5.1.25 ॥

हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ।
विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥5.1.26 ॥

दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ।
सहितास्तस्थुराकाशे वीक्षाञ्चक्रुश्च पर्वतम् ॥5.1.27 ॥

शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ।
चारणानां च सिद्धानां स्थितानां विमले ऽम्बरे ॥5.1.28 ॥

एष पर्वतसङ्काशो हनुमान् मारुतात्मजः ।
तितीर्षति महावेगस्समुद्रं वरुणालयम् ॥5.1.29 ॥

रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम् ।
समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥5.1.30 ॥

इति विद्याधरा वाचः श्रुत्वा तेषां  महात्मनाम् ।
तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥5.1.31 ॥

दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।
ननाद च महानादं  सुमहानिव तोयदः ॥5.1.32 ॥

आनुपूर्व्या च वृत्तं  तल्लाङ्गूलं  रोमभिश्चितम् ।
उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥5.1.33 ॥

तस्य लाङ्गूलमाविद्धमतिगवेगस्य पृष्ठतः ।
ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥5.1.34 ॥

बाहू संस्तम्भयामास महापरिघसन्निभौ ।
आससाद  कपिः कट्यां चरणौ सञ्चुकोच च ॥5.1.35 ॥

संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् ।
तेजः सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥5.1.36 ॥

मार्गमालोकयन्दूरादूर्ध्वं प्रणिहितेक्षणः ।
रुरोध हृदये प्राणानाकाशमवलोकयन् ॥5.1.37 ॥

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन् महाबलः ॥

वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ॥5.1.38 ॥

यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ।
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥5.1.39 ॥

न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ।
अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥5.1.40 ॥

यदि वा त्रिदिवे सीतां न द्रक्षामि  कृतश्रमः ।
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥5.1.41 ॥

सर्वथा कृतकार्यो ऽहमेष्यामि सह सीतया ।
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥5.1.42 ॥

एवमुक्त्वा तु हनुमान्वानरान्वानरोत्तमः ॥5.1.43 ॥

उत्पपाताथ वेगेन वेगवानविचारयन् ।
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥5.1.44 ॥

समुत्पतति तस्मिंस्तु वेगात्ते नगरोहिणः ।
संहृत्य विटपान् सर्वान् समुत्पेतुः समन्ततः ॥5.1.45 ॥

स मत्तकोयष्टिमकान् पादपान् पुष्पशालिनः ।
उद्वहन्नूरुवेगेन जगाम विमले ऽम्बरे ॥5.1.46 ॥

ऊरुवेगोत्थिता वृक्षा मुहूर्तं कपिमन्वयुः ।
प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥5.1.47 ॥

तमूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः ।
अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥5.1.48 ॥

सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः  कपिः ।
हनुमान् पर्वताकारो बभूवाद्भुतदर्शनः ॥5.1.49 ॥

सारवन्तो ऽथ ये वृक्षा न्यमज्जन् लवणाम्भसि ।
भयादिव महेन्द्रस्य पर्वता वरुणालये ॥5.1.50 ॥

स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः ।
शुशुभे मेघसङ्काशः खद्योतैरिव पर्वतः ॥5.1.51 ॥

विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ।
व्यवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥5.1.52 ॥

लघुत्वेनोपपन्नं तद्विचित्रं सागरे ऽपतत् ।
द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम्
ताराचितमिवाकाशं प्रबभौ स महार्णवः । ॥5.1.53 ॥

पुष्पौघेणसुगन्धेन नानावर्णेन वानरः ।
बभौ मेघ इवोद्यन् वै विद्युद्गण विभूषितः । ॥5.1.54 ॥

तस्य वेगसमुद्भूतैः पुष्पैस्तोयमदृश्यत ।
ताराभिरिव रामाभिरुदिताभिरिवाम्बरम् । ॥5.1.55 ॥

तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ
पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ । ।5.1.56 ॥

पिबन्निव बभौ चापि सोर्मिजालं महार्णवम् ।
पिपासुरिव चाकाशं ददृशे स महाकपिः ॥5.1.57 ॥

तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ।
नयने विप्रकाशेते पर्वतस्थाविवानलौ । ॥5.1.58 ॥

पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले
चक्षुषी सम्प्रकाशेते चन्द्रसूर्याविव स्थितौ । ॥5.1.59 ॥

मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ ।
सन्ध्यया समभिस्पृष्टं यथा स्यात्सूर्यमण्डलम् । ॥5.1.60 ॥

लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते ।
अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः । ॥5.1.61 ॥

लाङ्गूलचक्रो हनुमाञ्शुक्लदंष्ट्रो ऽनिलात्मजः ।
व्यरोचत महाप्राज्ञः परिवेषीव भास्करः । ॥5.1.62 ॥

स्फिग्देशेनातिताम्रेण रराज स महाकपिः ।
महता दारितेनेव गिरिर्गैरिकधातुना । ॥5.1.63 ॥

तस्य वानरसिंहस्य प्लवमानस्य सागरम् ।
कक्षान्तरगतो वायुर्जीमूत इव गर्जति । ॥5.1.64 ॥

खे यथा निपतत्युल्का उत्तरान्ताद्विनिःसृता ।
दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः । ॥5.1.65 ॥

पतत्पतङ्गसङ्काशो व्यायतः शुशुभे कपिः ।
प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया । ॥5.1.66 ॥

उपरिष्टाच्छरीरेण छायया चावगाढया ।
सागरे मारुताविष्टा नौरिवासीत्तदा कपिः । ॥5.1.67 ॥

यं यं देशं समुद्रस्य जगाम स महाकपिः ।
स तु तस्याङ्गवेगेन सोन्माद इव लक्ष्यते ॥5.1.68 ॥

सागरस्योर्मिजालानामुरसा शैलवर्ष्मणाम् ।
अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ॥5.1.69 ॥

कपिवातश्च बलवान् मेघवातश्च निर्गतः ।
सागरं भीमनिर्ह्रादं कम्पयामासतुर्भृशम् ॥5.1.70 ॥

विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ।
पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ॥5.1.71 ॥

मेरुमन्दरसङ्काशानुद्भूतान् सुमहार्णवे ।
अत्यक्रामन्महावेगस्तरङ्गान् गणयन्निव ॥5.1.72 ॥

तस्य वेगसमुद्घुष्टं जलं सजलदं तदा ।
अम्बरस्थं विबभ्राजे शरदभ्रमिवाततम् ॥5.1.73 ॥

तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा ।
वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥5.1.74 ॥

प्लवमानं समीक्ष्याथ भुजङ्गाः सागरालयाः ।
व्योम्नि तं कपिशार्दूलं सुपर्ण इति मेनिरे ॥5.1.75 ॥

दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ।
छाया वानरसिंहस्य जले चारुतराभवत् ॥5.1.76 ॥

श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ।
तस्य सा शुशुभे छाया पतिता लवणाम्भसि ॥5.1.77 ॥

शुशुभे स महातेजा महाकायो महाकपिः ।
वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥5.1.78 ॥

येनासौ याति बलवान् वेगेन कपिकुञ्जरः ।
तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥5.1.79 ॥

आपाते पक्षिसङ्घानां पक्षिराज इव व्रजन् ।
हनुमान् मेघजालानि प्रकर्षन् मारुतो यथा ॥5.1.80 ॥

पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ॥5.1.81 ॥

प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव दृश्यते ॥5.1.82 ॥

प्लवमानं तु तं दृष्ट्वा प्लवङ्गं त्वरितं तदा ।
ववृषुस्तत्र पुष्पाणि देवगन्धर्वदानवाः ॥5.1.83 ॥

तताप न हि तं सूर्यः प्लवन्तं वानरेश्वरम् ।
सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥5.1.84 ॥

ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ।
जगुश्च देवगन्धर्वाः प्रशंसन्तो वनौकसम् ॥5.1.85 ॥

नागाश्च तुष्टुवुर्यक्षा रक्षांसि विविधानि च ।
प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ॥5.1.86 ॥

तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ।
इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥5.1.87 ॥

साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ।
करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥5.1.88 ॥

अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ।
इक्ष्वाकुसचिवश्चायं तन्नार्हत्यवसादितुम् ॥5.1.89 ॥

तथा मया विधातव्यं विश्रमेत यथा कपिः ।
शेषं च मयि विश्रान्तः सुखी सोऽतितरिष्यति । ॥5.1.90

इति कृत्वा मतिं साध्वींसमुद्र श्छन्नमम्भसि ।
हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् । ॥5.1.91 ॥

त्वमिहासुरसंघानां देवराज्ञा महात्मना ।
पातालनिलयानां हि परिघः सन्निवेशितः । ॥5.1.92 ॥

त्वमेषां ज्ञातवीर्याणां पुनरेवोत्पतिष्यताम् ।
पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि । ॥5.1.93 ॥

तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ।
तस्मात्संचोदयामि त्वामुत्तिष्ठ गिरिसत्तम । ॥5.1.94 ॥

स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ।
हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः । ॥5.1.95 ॥

अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः
मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव । ॥5.1.96 ॥

कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् ।
कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् । ॥5.1.97 ॥

सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ।
अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः । ॥5.1.98 ॥

चामीकरमहानाभ देवगन्धर्वसेवित
हनुमांस्त्वयि विश्रान्तस्ततः शेषं गमिष्यति । ॥5.1.99 ॥

काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ।
श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि । ॥5.1.100 ॥

हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ।
उत्पपात जलात्तूर्णं महाद्रुमलतायुतः । ॥5.1.101 ॥

स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा ।
यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥5.1.102 ॥

स महात्मा मुहूर्तेन सर्वतः सलिलावृतः ।
दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥5.1.103 ॥

शातकुम्भमयैः शृङ्गैः सकिन्नरमहोरगैः ।
आदित्योदयसङ्काशैरुल्लिखद्भिरिवाम्बरम् । ॥5.1.104 ॥

तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः ।
आकाशं शस्त्रसङ्काशमभवत्काञ्चनप्रभम् ॥5.1.105 ॥

जातरूपमयैः शृङ्गैर्भ्राजमानैर्महाप्रभैः ।
आदित्यशतसङ्काशः सो ऽभवद्गिरिसत्तमः ॥5.1.106 ॥

समुत्थितमसङ्गेन हनुमानग्रतः स्थितम् ।
मध्ये लवणतोयस्य विघ्नो ऽयमिति निश्चितः ॥5.1.107 ॥

स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ।
उरसा पातयामास जीमूतमिव मारुतः ॥5.1.108 ॥

स तदासादितस्तेन कपिना पर्वतोत्तमः ।
बुद्ध्वा तस्य हरेर्वेगं जहर्ष च ननाद च ॥5.1.109 ॥

तमाकाशगतं वीरमाकाशे समुपस्थितः ।
प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ॥5.1.110 ॥

मानुषं धारयन् रूपमात्मनः शिखरे स्थितः ।
दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम ॥5.1.111 ॥

निपत्य मम शृङ्गेषु  सुखम्  विश्रम्य गम्यताम् ।
राघवस्य कुले जातैरुदधिः परिवर्धितः  ॥5.1.112 ॥

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्यमेष धर्मः सनातनः  ॥5.1.113 ॥

सो ऽयं त्वत्प्रतिकारार्थी त्वत्तः सम्मानमर्हति ।
त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः  ॥5.1.114 ॥

योजनानां शतं चापि कपिरेष खमाप्लुतः ।
तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति  ॥5.1.115 ॥

तिष्ठ त्वं हरिशार्दूल मयि विश्रम्य गम्यताम् ।
तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु  ॥5.1.116 ॥

तदास्वाद्य हरिश्रेष्ठ विश्रान्तो ऽथ गमिष्यसि ।
अस्माकमपि सम्बन्ध: कपिमुख्य त्वयास्ति वै ।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥5.1.117 ॥

वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ।
तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर  ॥5.1.118 ॥

अतिथिः किल पूजार्हः प्राकृतो ऽपि विजानता ।
धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान् ॥5.1.119 ॥

त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर  ॥5.1.120 ॥

पूजिते त्वयि धर्मज्ञे पूजां प्राप्नोति मारुतः ।
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥5.1.121 ॥

पूर्वं कृतयुगे तात पर्वताः पक्षिणो ऽभवन् ।
ते हि जग्मुर्दिशः सर्वा गरुडानिलवेगिनः ॥5.1.122 ॥

ततस्तेषु प्रयातेषु देवसङ्घा: सहर्षिभिः ।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥5.1.123 ॥

ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः ।
पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ।।5.1.124 ॥

स मामुपागतः क्रुद्धो वज्रमुद्यम्य देवराट् ।
ततो ऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥5.1.125 ॥

अस्मिन्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ।
गुप्तपक्षसमग्रश्च तव पित्राभिरक्षितः ॥5.1.126 ॥

ततो ऽहं मानयामि त्वां मान्यो हि मम मारुतः ।
त्वया ममैषस्सम्बन्धः कपिमुख्य महागुणः ॥5.1.127 ॥

अस्मिन्नेवंगते कार्ये सागरस्य ममैव च ।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ॥5.1.128 ॥

श्रमं मोक्षय पूजां च गृहाण कपिसत्तम ।
प्रीतिं च मम मान्योऽसि प्रीतो ऽस्मि तव दर्शनात् ॥5.1.129 ॥

एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ।
प्रीतो ऽस्मि कृतमातिथ्यं मन्युरेषो ऽपनीयताम् ॥5.1.130 ॥

त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ।
प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा ॥5.1.131 ॥

इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ।
जगामाकाशमाविश्य वीर्यवान् प्रहसन्निव ॥5.1.132 ॥

स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ।
पूजितश्चोपपन्नाभिराशीर्भिरभिनन्दितः ॥5.1.133 ॥

अथोर्ध्वं दूरमागत्य हित्वा शैलमहार्णवौ ।
पितुः पन्थानमासाद्य जगाम विमले ऽम्बरे ॥5.1.134 ॥

भूयश्चोर्ध्वं गतिं प्राप्य गिरिं तमवलोकयन् ।
वायुसूनुर्निरालम्बो जगाम विमले ऽम्बरे ॥5.1.135 ॥

तद् द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥5.1.136 ॥

देवताश्चाभवन् हृष्टास्तत्रस्थास्तस्य कर्मणा ।
काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥5.1.137 ॥

उवाच वचनं धीमान् परितोषात्सगद्गदम् ।
सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ॥5.1.138 ॥

हिरण्यनाभ शैलेन्द्र परितुष्टो ऽस्मि ते भृशम् ।
अभयं ते प्रयच्छामि गच्छ सौम्य यथासुखम् ॥5.1.139 ॥

साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः ।
क्रमतो योजनशतं निर्भयस्य भये सति ॥5.1.140 ॥

रामस्यैष हितायैव याति दाशरथेः कपिः।
सत्क्रियां कुर्वता शक्त्या तोषितोऽस्मि दृढं त्वया ॥5.1.141॥

स तत् प्रहर्षमलभद् विपुलं पर्वतोत्तमः।
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥5.1.142॥

स वै दत्तवरः शैलो बभूवावस्थितस्तदा ।
हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥5.1.143॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन् सूर्य संकाशां सुरसां नागमातरम् ॥5.1.144॥

अयं वातात्मजः श्रीमान् प्लवते सागरोपरि ।
हनूमान् नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥5.1.145॥

राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ।
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम् ॥5.1.146॥

बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम्।
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥5.1.147॥

एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ।
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥5.1.148॥

विकृतं च विरूपं च सर्वस्य च भयावहम्।
प्लवमानं हनूमन्तमावृत्येदमुवाच ह ॥5.1.149॥

मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ।
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥5.1.150॥

वर एष पुरा दत्तो मम धात्रेति सत्वरा
व्यादाय वक्त्रं विपुलम् स्थिता सा मारुतेः पुरः ॥5.1.151॥

एवमुक्तः सुरसया प्रहृष्ट्वदनोऽब्रवीत्

रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥5.1.152॥

अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः।
तस्य सीता हृता भार्या रावणेन यशस्विनी ॥5.1.153॥

तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात्।
कर्तुमर्हसि रामस्य साह्यं विषयवासिनि ॥5.1.154॥

अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ।
आगमिष्यामि ते वक्त्रं सत्यं प्रतिश्रृणोमि ते ॥5.1.155॥

एवमुक्ता हनुमता सुरसा कामरूपिणी ।
अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम ॥5.1.156॥

तं प्रयान्तं समुद्वीक्ष्य  सुरसा वाक्यमब्रवीत् ।
बलं जिज्ञासमाना सा नागमाता हनूमतः ॥5.1.157॥

निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥5.1.158॥

व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः
एवमुक्तः सुरसया क्रुद्धो वानरपुंगवः ॥5.1.159॥

अब्रवीत् कुरु वै वक्त्रं येन मां विषहिष्यसि।
इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायताम् ॥5.1.160॥

दशयोजनविस्तारो हनुमानभवत् तदा ।
तं दृष्ट्वा मेघसङ्काशं दशयोजनमायतम् ।
चकार सुरसाप्यास्यं विंशद्योजनमायतम् ॥5.1.161॥

हनुमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ।
चकार सुरसा वक्त्रं चत्वारिंशत् तथोच्छ्रितम् ॥5.1.162॥

बभूव हनुमान वीरः पञ्चाशद् योजनोच्छ्रितः ।
चकार सुरसा वक्त्रं षष्टिं योजनमुच्छ्रितम् ॥5.1.163॥

तदैव हनुमान् वीरः सप्ततिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रमशीतिं योजनमुच्छ्रितम् ॥5.1.164॥

हनूमाननलप्रख्यो नवतिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रं शतयोजनमायतम् ॥5.1.165॥

तद् दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान् ।
दीर्घजिह्वं सुरसया सुभीमं नरकोपमम् ॥5.1.166॥

स सङ्क्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन् मुहूर्ते हनुमान् बभूवाङ्गुष्ठमात्रकः ॥5.1.167॥

सोऽभिपद्याथ तद्वक्त्रं निष्पत्य च महाबलः ।
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥5.1.168॥

प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्यश्चासीद् वरस्तव ॥5.1.169॥

तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।
अब्रवीत् सुरसा देवी स्वेन रूपेण वानरम् ॥5.1.170॥

अर्थसिध्द्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥5.1.171॥

तत तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
साधुसाध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥5.1.172॥

स सागरमनाधृष्यमभ्येत्य वरुणालयम् ।
जगामाकाशमाविश्य वेगेन गरुडोपमः ॥5.1.173॥

सेविते वारिधाराभिः पतगैश्च निषेविते ।
चरिते कैशिकाचार्यैरैरावतनिषेविते ॥5.1.174॥

सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ।
विमानैः सम्पतद्भिश्च विमलैः समलङ्कृते ॥5.1.175॥

वज्राशनिसमस्पर्शैः पावकैरिव शोभिते ।
कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरधिष्ठिते ॥5.1.176॥

वहता हव्यमत्यन्तं सेविते चित्रभानुना ।
ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥5.1.177॥

महर्षिगणगन्धर्वनागयक्षसमाकुले ।
विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥5.1.178॥

देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ।
विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥5.1.179॥

बहुशः सेविते वीरैर्विद्याधरगणैर्वृते ।
जगाम वायुमार्गे च गरुत्मानिव मारुतिः ॥5.1.180॥

हनूमान् मेघजालानि प्राकर्षन् मारुतो यथा ।
कालागुरुसवर्णानि रक्तपीतसितानि च॥ ॥5.1.181॥

कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥5.1.182॥

प्रावृषीन्दुरिवाभाति निष्पतन् प्रविशंस्तदा ।
प्रदृश्यमानः सर्वत्र हनूमान् मारुतात्मजः ॥5.1.183॥

भेजेऽम्बरं निरालम्बं पक्षयुक्त इवाद्रिराट् ।
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ॥5.1.184॥

मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ।
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ॥5.1.185॥

इदं  मम महासत्त्वं चिरस्य वशमागतम् ।
इति सञ्चिन्त्य मनसा छायामस्य समाक्षिपत् ॥5.1.186॥

छायायां गृह्यमाणायां चिन्तयामास वानरः ।
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ॥5.1.187॥

प्रतिलोमेन वातेन महानौरिव सागरे ।
तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्तदा कपिः ।।5.1.188॥

ददर्श स महासत्त्वमुत्थितं लवणाम्भसि ।
तद् दृष्ट्वा चिन्तयामास मारुतिर्विकृताननाम् ॥5.1.189॥

कपिराज्ञा यथाख्यातं सत्वमद्भुतदर्शनम्।
छायाग्राहि महावीर्यं तदिदं नात्र संशयः॥5.1.190॥

स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपिः ।
व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥5.1.191॥

तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ।
वक्त्रं प्रसारयामास पातालाम्बरसंनिभम् ॥5.1.192॥

घनराजीव गर्जन्ती वानरं समभिद्रवत्।
स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् ॥5.1.193॥

कायमात्रं च मेधावी मर्माणि च महाकपिः ।
स तस्या विकृते वक्त्रे वज्रसंहननः कपिः ॥5.1.194॥

सङ्क्षिप्य मुहुरात्मानं निपपात महाकपिः ।
आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ॥5.1.195॥

ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ।
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ॥5.1.196॥

उत्पपाताथ वेगेन मनःसम्पातविक्रमः ।
तां तु दिष्ट्या च धृत्या च दाक्षिण्येन निपात्य सः ॥5.1.197॥

कपिप्रवीरो वेगेन ववृधे पुनरात्मवान् ।
हृतहृत्सा हनुमता पपात  विधुराम्भसि।
स्वयम्भुवैव हनुमान् सृष्टस्तस्या निपातने ॥5.1.198॥

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ।
भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥5.1.199॥

भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ।
साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ॥5.1.200॥

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ॥5.1.201॥

स तैः सम्पूजितः पूज्यः प्रतिपन्नप्रयोजनैः।
जगामाकाशमाविश्य पन्नगाशनवत् कपिः ॥5.1.202 ॥

प्राप्तभूयिष्ठपारस्तु सर्वतः परिलोकयन् ।
योजनानां शतस्यान्ते वनराजीं ददर्श सः॥5.1.203 ॥

ददर्श च पतन्नेव विविधद्रुमभूषितम् ।
द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥5.1.204 ॥

सागरं सागरानूपान् सागरानूपजान् द्रुमान् ।
सागरस्य च पत्नीनां मुखान्यपि विलोकयत् ॥5.1.205 ॥

स महामेघसङ्काशं समीक्ष्यात्मानमात्मवान् ।
निरुन्धन्तमिवाकाशं चकार मतिमान् मतिम् ॥5.1.206 ॥

कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः ।
मयि कौतूहलं कुर्युरिति मेने महामतिः ॥5.1.207 ॥

ततः शरीरं सङ्क्षिप्य तन्महीधरसंनिभम् ।
पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ 5.1.208 ॥

तद्रूपमतिसंक्षिप्य हनूमान् प्रकृतौ स्थितः ।
त्रीन् क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ 5.1.209 ॥

स चारुनानाविधरूपधारी
परं समासाद्य समुद्रतीरम् ।
परैरशक्यं प्रतिपन्नरूपः
समीक्षितात्मा समवेक्षितार्थः ॥ 5.1.210 ॥

ततः स लम्बस्य गिरेः समृद्धे
विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनारिकेले
महाभ्रकूटप्रतिमो महात्मा ॥ 5.1.211 ॥

ततस्तु सम्प्राप्य समुद्रतीरं
समीक्ष्य लङ्कां गिरिवर्यमूर्न्धि ।
कपिस्तु तस्मिन् निपपात पर्वते
विधूय रूपं व्यथयन्मृगद्विजान् ॥ 5.1.212 ॥

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा
ददर्श लङ्काममरावतीमिव ॥ 5.1.213 ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे प्रथमः सर्गः ॥ 1 ॥